# परा पूजा

अखण्डे सच्चिदानन्दे निर्विकल्पैकरूपिणि ।

स्थितेऽद्वितीयभावेऽस्मिन् कथं पूजा विधीयते ॥ १॥

पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् ।

स्वच्छस्य पाद्यमर्घ्यं तु शुद्धस्याचमनं कुतः ॥ २॥

निर्मलस्य कुतः स्नानं वस्त्रं विश्वोदरस्य च ।

निरालम्बस्योपवीतं पुष्पं निर्वासनस्य च ॥ ३॥

निर्लेपस्य कुतो गन्धः पुष्पं निर्वासनस्य च । ।

निर्विशेषस्य का भूषा कोऽलङ्कारो निराकृतेः ॥ ४॥

निरञ्जनस्य किं धूपैर्दीपैर्वा सर्वसाक्षिणः ।

निजानन्दैकतृप्तस्य नैवेद्यं किं भवेदिह ॥ ५॥

विश्वानन्दयितुस्तस्य किं तांबूलं प्रकल्पते।

स्वयंप्रकाशचिद्रूपो योऽसावर्कादिभासकः ॥ ६॥

गीयते श्रुतिभिस्तस्य नीराजनविधिः कुतः ।

प्रदक्षिणमनन्तस्य प्रमाणोऽद्वयवस्तुनः ॥ ७॥

स्वयंप्रकाशमानस्य कुतो नीराजनं विभोः ।

अन्तर्बहिः संस्थितस्योद्वासनविधिः कुतः ॥ ८॥

एवमेव परा पूजा सर्वावस्थासु सर्वदा ।

एकबुद्ध्या तु देवेश विधेया ब्रह्मवित्तमैः ॥ ९॥

योगी देहाभिमानी स्याद्रोगी कर्मणि तत्परः ।

ज्ञानी मोक्षाभिमान्येव तत्त्वज्ञेनाभिमानिता ॥ १०॥

किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।

आत्मना पूरितं सर्वं महाकल्पाम्बुना सदा ॥ ११॥

॥ इति परा पूजा समाप्ता ॥